॥ श्रीः ॥

"यान्यस्माकꣳ सुचरितानि तानि त्वयोपास्यानि ॥"

# ॥ पुरुषार्थमीमांसा ॥



श्रुतिमूलः स्मृतिस्कंधः सदाचारसुमोज्वलः ॥
धर्मकल्पतरुर्जीयात्पुरुषार्थफलप्रदः ॥

इह खलु सर्वेषां मानुषाणामिष्यमाणतयाऽवगतेषु पुरुषार्थेषु प्रवृत्तिर्नैसर्गिकी । सा प्रवृत्तिरविगीता पुंसां निखिलश्रेयस्साधनाय कल्पते ॥ विभिन्नरुचीनां लोकानां पुरुषार्थप्रवृत्तयोऽपि नानाप्रकाराः । विशिष्टसंस्कारोपेतांतःकरणानुरूपा मनुष्याणामभिरुचिः ॥ सा यद्यनवस्थिता तदा लोकमर्यादा विपर्यस्ता भवेदिति लोकतः शास्त्रतश्च कापि व्यवस्था सर्वेषामावश्यकी भवति । पौरुषेयीमपौरुषेयीं वा व्यवस्थामाश्रित्य पुरुषार्थसाधनाय प्रयतंते ॥ महापुरुषैरनुष्ठीयमानो धर्मः प्रचयं गमिष्यति । धर्मस्वरूपनिरूपणं हि नानाशाखासु विप्रकीर्णत्वेन कालदेशादिभेदेन व्यवस्थानामानंत्येन नानाप्रकरणस्थत्वेन च दुरवगाहमतिसूक्ष्मं च तदत्र शास्त्राण्येव प्रमाणम् । उक्तं च भगवता (गी. १६ अ. श्लो. २४) 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थिता' विति ॥ शास्त्राणि पुरुषं धर्मे प्रवर्तयंति निव-

र्त्तयंति चाधर्मात् ॥ प्रवृत्तिप्रयोजको विधिः । निवृत्तिप्रयोजकः प्रतिषेधः । विधिप्रतिषेधौ शास्त्राचार्योपदेशनयलोकवृत्तादिविज्ञानेन सम्यग्विज्ञाय पुरुषार्थसाधनाय प्रयतितव्यम् ॥ अज्ञाते अन्यथा ज्ञाते वा पुरुषार्थस्वरूपे न किमपि प्रयोजनं भवति । परमार्थदर्शिनः पुरुषाः परस्परानुबंधिषु पुरुषार्थेषु यथायोगं प्रवृत्ताः परां सिद्धिमुपयांति ॥ अत्र केचन सुखहेतुत्वादर्थकामावेव श्रेयो मन्वते ॥ अपरे कामहेतुतामवष्टभ्य धर्मार्थौ श्रेयो विजानंति ॥ अर्थ एव धर्मकामयोस्साधनमिति तमेव परमार्थमाचक्षते मनीषिणः कतिचन ॥ आचार्याः केचन धर्म एवार्थकामयोर्मूलमिति व्यवस्यंति ॥ अनाद्यविद्यावासनया कृतकामकर्मवशादुच्चावचेषु जन्मसु परिभ्रमतो जीवराशेः कदाचित्स्वकृतकुशलकर्मणा लब्धे मानुष्यके यथाविधि साधितेन त्रिवर्गेण शुद्धसत्वस्य कर्मबंधनिवृत्तिलक्षणो मोक्ष एव परमार्थस्तत्साधनद्वारा धर्मार्थकामरूपस्य त्रिवर्गस्यापि पुरुषार्थत्वमिति प्रकाशयंति शास्त्ररहस्यमन्ये ॥ एवं यथाभिलाषं विप्रतिपन्नेपि पुरुषार्थविचारे परस्पराविरोधिनश्चत्वारः पुरुषार्थाः श्रेयोभ्युदयहेतव इति सर्वेषामपि प्राज्ञानामभिमतम् ॥ यथा विजिज्ञासितस्यास्यैवार्थस्याभिव्यक्तिर्भवेत् तथैवेयमारभ्यते पुरुषार्थमीमांसा ॥

पुरुषार्थाश्चत्वारो धर्मार्थकाममोक्षाः । एतेषु धर्मार्थकामानां त्रिवर्गसंज्ञया व्यवहारः । समोक्षाणामेषां चतुर्वर्ग इति च ॥ पुरुषार्थसाधनाय प्रयतमानेन सांगानि सरहस्यानि तत्प्रमाणान्यध्येतव्यानि ॥ उपासनीया ज्ञानवृद्धा गुरवः ॥ स्वयं च श्रद्धास्तिक्यपूतमानसेन भाव्यम् ॥ कामात्मानो हेतुवादपरा नास्तिकाश्च नाधिक्रियंते शास्त्रेषु । प्रभुसंमितानि शास्त्राणि विकल्पासहानि ॥ लौकिकालौकिकोपायबोधकानि तान्यान्वीक्षिकी त्रयी वार्ता दंडनीतिरिति चत्वारि ॥ आन्वीक्षिक्यां जीवस्य स्वरूपानंदाविर्भावलक्षणमोक्षोपायः । त्रय्यां धर्माधर्मविवेकः । वार्तायां कृषिवाणिज्यपाशुपाल्यप्रमुखवृत्तिनिरूपणम् ॥ दंडनीत्यां लोकयात्रानिर्वहणोपायः ॥ एष्वेव प्रतिष्ठितास्सर्वे पुरुषार्थाः ॥

इतराण्यपि शास्त्राणि साक्षात्परंपरया वा बहूपकुर्वंति पुरुषार्थानाम् ॥ पुरुषार्थसाधकानां शास्त्रविज्ञानं सहजः प्रबोधः क्रियासु दाक्ष्यं देशकालानुरोधः सूनृता वाणी स्थिरस्संकल्पः प्रतिभा चेति लोकमान्या गुणाः काममापूरयंति त्रिवर्गस्य लौकिकमलौकिकं चेति द्विविधं फलम् ॥ तत्र प्रथमोद्दिष्टं लोकयात्रानिर्वहणोपयोगि भवति ॥ शारीरमानसबलवृद्धिरात्मरक्षणं विहितवृत्त्या जीविकालाभः स्वकुटुंबरक्षणं परोपकृतिः सामा-

जिकव्यवहारो नीत्यनुरोधः पापान्निवृत्तिरित्यादयस्सर्वेषामैहि-
कसुखहेतवः शास्त्रनिर्दिष्टा यथाविध्यनुष्ठातारं सुकृतैर्वर्धयंति ॥
द्वितीयं तु जन्ममरणलक्षणसंसारपरिश्रांतस्य जीवस्य स्वर्गाप-
वर्गसाधकम् ॥ एतदेवैहिकमामुष्मिकं फलं मनुपराशरादिभि-
र्महामुनिभिर्धर्मशास्त्रेषु प्रपंचितम् ॥ चतुर्षु पुरुषार्थेषु धर्मस्यैव
प्राधान्यम् । अर्थकामावपि धर्मस्यैवांगभूतौ ॥ केवलभोगार्थयो-
रनयोर्न पुरुषार्थत्वम् । शास्त्रेषु विनिंदितत्वात् ॥ अतः धर्मस्य
पुरुषार्थेष्वभ्यर्हितत्वात् तत्स्वरूपलक्षणप्रामाण्यविभागादीन्
विचारयामः ॥ 'श्रुतिचोदितक्रियाजन्यो निखिलश्रेयोभ्युदय-
हेतुरपूर्वाख्यो गुणो धर्मः । यमार्याः क्रियमाणं प्रशंसंति स
धर्मः' इत्यादीनि धर्मलक्षणानि श्रुतिमूलकतयैव प्रामाण्यं
धर्मस्य कथयंति ॥ एतेन पौरुषेयीं कांचन व्यवस्थामाश्रित्य
प्रवृत्तेषु चैत्यवंदनकेशोल्लुञ्छननग्नस्नानादिरूपेषु शाक्यादि-
धर्माभासेषु श्रुतिमूलकत्वाभावात् धर्मत्वं प्रत्यादिष्टम् । ननु
'शाक्यादयः क्षत्रियाः श्रुतिविदः । तत्प्रणीतागमानामपि श्रुति-
मूलकतया प्रामाण्यमव्याहतं तन्मूलभूतश्रुतीनामिदानीमुत्सन्न-
प्रच्छन्नत्वेनानुपलंभा'दिति चेन्मैवम् ॥ वेदाप्रामाण्यवादिनां तेषां
धर्मस्य वेदमूलकत्वकल्पनानौचित्येन तदसंभावितमेव ॥ नच
पापीयसीं योनिमापन्नानां संकरजातीनां कैवर्तभिल्लपुल्कसा-

दीनां श्रुत्यनर्हाणां तत्तत्कुलीनमहापुरुषाचरितधर्मेणैव चारितार्थ्यं दृष्टम् । भगवान्बादरायणोपि (भागवते ७ स्कंधे १४ अध्याये) "स्वभावविहितो धर्मः कस्य नेष्टः प्रशांतये" इति प्रत्यपीपदत् । उक्तं च भगवता (गीतायां १८ अ.) "स्वभावविहितं कर्म सदोषमपि न त्यजेत्" इति । तस्मात्स्वभावविहितधर्मस्य श्रुतिचोदनाभावादिदं लक्षणमव्याप्तमिति वाच्यम् ।। धर्मविभागापरिज्ञानमूला भ्रांतिरियं यदुच्यते विहितकुलाचारेण चारितार्थ्यमिति ।। स हि वृत्तिधर्मतया विहितः ।। लोकयात्रानिर्वाहाय वृत्तिधर्मोपि श्रुतिचोदित एव ।। मन्वादयो महर्षयो मंत्रद्रष्टारस्तमर्थं स्मृतिषु निबबंधुः । नहि वितथगिरो महामुनयः ।। तस्मिन्नपि वृत्तिधर्मे यावदर्थपरिग्रहादिधर्मेण वर्तमानानामष्टाभिरात्मगुणैर्दया क्षांति रनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेतिगौतमादिप्रतिपादितैर्निरूढवृत्तानामस्त्येव कोप्युत्तरोत्तरप्रकृष्टजन्महेतुर्धर्मइति संप्रतिपन्नमेव विदुषाम् ।। तत्तत्कुलीना अपि महापुरुषा निर्वैररागाः प्रशांतहृदयाः कमपि धर्मसूक्ष्मेक्षिकया विचार्य जीविकानिर्वाहाय निरूपयामासुः ।। यथा लोकयात्रा न विपद्येत यथा धर्मः स्वनुष्ठितो भवेत् तथैव प्रवर्तंते महाजनाः ।। रजस्तमःप्रकृतयो वृत्तिकर्शिता हिंसाचौर्यादिषु यथा न प्रवर्तेरन् तथा लोकरक्षणाय सर्वे

नियमास्समारब्धाः ॥ तमेतमर्थमभिसंधायैव भगवान्मनुरपि 'विद्वद्भिस्सेवितः' 'हृदयेनाभ्यनुज्ञातोयोधर्म' इति धर्मलक्षणमभाणीत् द्वितीयाध्याये ॥ तस्माल्लोकद्वयाविरोधिनां सर्वेषामपि धर्माणां वेदमूलकतयैव प्रामाण्यनिर्वाहान्नोक्तदोषप्रसंगः ॥ धर्मज्ञापकहेतवः श्रुतिः स्मृतिः सदाचारः अविगीतात्मेच्छेति चत्वारः परस्परानुबंधिनः श्रेयोभ्युदयहेतवः ॥ सदाचारः सर्वधर्ममूलम् ॥ उक्तलक्षणो धर्मो द्विविधः ॥ साधारणो विशिष्टश्चेति ॥ तत्र साधारणो याज्ञवल्क्यादिभिरुपदर्शितः । अहिंसा सत्यम् अस्तेयम् शौचम् इंद्रियनिग्रहः दानं दया दमः क्षांतिरिति सर्वेषां साधारणः ॥ विशिष्टस्तु श्रौतः स्मार्तश्चेति द्विविधः । सोमसंस्थादिः श्रौतः ॥ तदुपयोगी स्मार्तस्तु वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मश्चेति पंचविधस्त्रैवर्णिकमात्रविषयः ॥ इतरेषामपि सत्यलौकिकोपायबोधार्थित्वे हेत्वंतरेण निषेधदर्शनान्न तत्राधिकारः । यस्मिन्नविच्छिन्ना गर्भाधानादयो वैदिकास्संस्कारा यथाक्रमं निर्वृत्ताः स द्विजो विहितेषु धर्मेष्वधिकारी भवति ॥ द्विजशरीरं वैदिकसंस्कारैस्संस्कृतमुपाचितगुणं भवति ॥ यथा दोहदेन गुणाधिक्यं तरूणाम् ॥ अस्तु वा तादृक्संस्कारः शूद्रस्यापीति चेत् ॥ न चायमर्हति वैदिकं संस्कारं योग्यताभावात् । केव-

लरजस्तमःप्रकृतीनां सत्वैकसाध्यानि कर्माणि दुस्तरकानि ॥ श्रद्धामयः पुरुषस्तदनुरूपमेव कर्मारभते ॥ इदं च प्रतिपादितं भगवता (गीतायां १९ अ.) "सत्वानुरूपा सर्वस्य श्रद्धा भवति भारते"त्यादिभिः ॥ नहि शक्यं प्रकृतिमन्यथा कर्तुं व्यापारश-तैरपि ॥ द्रव्याणां सुसूक्ष्मः कश्चिद्विलक्षणः परिणामविशेषः संस्कारसाध्यः ॥ तद्विशेषं सर्वज्ञकल्पा मंत्रार्थरहस्यवेत्तारो मुनयो विजानते ॥ नियोगपर्यनुयोगपदमतिक्रामंति महतां शास-नानि ॥ वयमिह तदादेशकारिणः केवलम् ॥ अपरे छांदसाः पुनर्गायत्र्या ब्राह्मणमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यम् न केनापि शूद्रमिति श्रुतिमवलंब्यच्छन्दसा सृष्टानां त्रैव-र्णिकानामेवच्छांदसस्संस्कारो नान्येषामिति निगदंति ॥ व-स्तुतस्तु लोकेपि यथा गुणाधिकेष्वेवाधिकारः प्रचयं गमिष्यति तथैव संसारिणः पुरुषस्यापीति हृदयम् ॥ त्रैवर्णिकेष्वपि तत्तदा-श्रमानुरोधेन धर्मो विहितः ॥ यथा ब्रह्मचारिधर्मो गृहस्थधर्म इ-त्यादिः ॥ ननु वेदाभ्यासाग्निहोत्रादीनि कर्माणि विधीयंते शा-स्त्रेषु न धर्माः । अतींद्रियाणां तेषां निरूपणाशक्यत्वात् इति चे-त्सत्यम् ॥ अतींद्रियस्यापि कर्मजन्यापूर्वाख्यस्य धर्मस्य तद्धेतु-भूतकर्मव्याख्यानादेव लक्षणप्रामाण्याद्यभिव्यक्तिर्भविष्यतीति सर्वाण्यपि कर्माण्येव निरूपितानि ॥ वर्णमधिकृत्य प्रवृत्तो वर्ण-

धर्मः उपनयनवेदाभ्यासादिः स साधारणस्त्रैवर्णिकानाम् ॥ ब्राह्मणानां तु प्रवचनप्रतिग्रहादिको विशिष्ट इति पूर्वोक्तपंचस्वपि साधारणविशिष्टाख्यौ भेदौ प्रवर्तेते ॥

वर्णाश्रमोचितानि कर्माणि यथाविधि यथाशक्ति सम्यगाचरन् संकल्पितानैहिकान् आमुष्मिकांश्च कामान् समश्नुते ॥ अहिंसादयो ये साधारणधर्मास्तान्निरूपयामः ॥ अहिंसानाम त्रिभिः करणैः प्राणिनामपीडनं यया च्छेदभेदादिनात्यर्थं व्यथंते भूतानि सा कायिकी। यया हृदि विद्ध इव संतप्यते लोकः सा वाचिकी। मानसिकी पुनरनिष्टचिंतनया समुद्भूतक्रोधावेशादिना भूतानि बाधते मलिनयाति च चित्तम् ॥ मलिने चित्ते परात्मनोर्विनाशहेतवो रागद्वेषादयस्समुत्पद्यंते ॥ त एव खलु साक्षात्पुरुषार्थविरोधिनः ॥ उक्तं च भगवता (गी. अ. १९) "द्वारं नाशनमात्मन" इति ॥ मनस्तु सकृद्दृष्टश्रुतानुभूतार्थान् विषयीकृत्य आहितसंस्कारवशात् क्वचित्कदाचित् तदेवान्वेति प्राक्संस्कारारब्धान्येव कर्माणि प्राणिनां यतो जातमात्रस्यापि शिशोरसंस्कृतमतेः स्तन्यपानादिप्रवृत्तिरपि प्राक्संस्कारारब्धैव, पुनर्जन्मबंधहेतुरपि संस्कार एव जननांतरकृतानि संस्मरति खलु मनः ॥ महाकवयोपि मनो हि जन्मांतरसंगतिज्ञमिति प्रत्यपीपदन् ॥ संस्कारः फलानुमेय इति प्रथितं च

लोके ॥ यथा मनसि पापीयान् संस्कारांकुरो नोत्पद्येत तथा प्रयतितव्यमित्यनुशासनार्थमेव ॥ सर्वशास्त्रीयविधिप्रतिषेधारंभः सफलो भवति ॥ कायिकेनापराधेन स्थावरत्वं वाचिकेन पाशवं मानसिकेन च अंत्यजतामुपैतीति भृगुसंहितायां (१२ अ.) मनूक्तमनूद्यते ॥ अतः पापीयान्मानसिकोपराधः । तस्मात्रिभिः करणैरहिंसैव परमो धर्म इति श्रुतिरनुशास्ति 'माहिंस्यात्सर्वाभूतानी' ति ॥ नचाग्निष्टोमीयपश्वालंभनस्यापि हिंसारूपत्वेन कथमहिंसा परमो धर्म इति वाच्यम् । यथा दंडपारुष्यनिर्णये राजाज्ञाविहितकशाप्रहारो न हिंसा भवति यथा अन्यत्र सा हिंसैव तथा विहितेषु न हिंसैव ॥ अहिंसया स्थैर्यं वैतृष्ण्यं मनःप्रसादमभयं चाधिगच्छति ॥ शरीराद्यस्थिरत्वविचारेण निवृत्तहिंसाकर्मणः पुरुषस्य संसर्गाद् भूतान्यपि निर्वैराणि भवंति ॥ अतः अहिंसा परमो भवेत् ॥ सत्यं नाम यथार्थमूनृताभिधानम् । 'सत्यान्नास्ति परो धर्मः' 'सत्येन विधृतानि जगंति' 'सर्वाणि भूतानि सत्येन संतिष्ठंते' 'सत्ये सर्वं प्रतिष्ठित' मिति ॥ यजुरारण्यकी श्रुतिरपि 'तस्मात्सत्यं परमं वदंती' त्यभिदधाति ॥ तदेतत्सत्यं सर्वधर्मेष्वभ्यर्हितमहिंसाधृतिक्षमादिशुभगुणानां निधानं सत् पुरुषार्थसाधनाय बहूपकरोति ॥ अत्र लोकतंत्र-

निष्णाताः "सत्यं दुरूहलक्षणं न निश्चेतुं शक्यते । येन परेषामुपतापो भवति तत्सत्यमपि विफलं प्रत्यवायहेतुश्च । तस्मात्सुसूक्ष्मां कार्यगतिमभिवीक्ष्य सत्यासत्ययोः प्राबल्य-दौर्बल्ये निश्चेतव्ये । कार्यगत्यनुरोधेनानृतमपि सत्यस्यैव फलमुपनयति । तदेतदनुशिष्टं पूर्वाचार्यैः 'पंचानृतान्याहुर-पातकानी' ति ॥ उपन्यस्यंति 'अन्यदेव हि पांडित्यमन्य-च्छास्त्रनिबंधन'मिति ॥ नात्र स्वाच्छन्द्यमवलंबितुं युज्यते ॥ कचि-त्सत्यानृतयोः फलविपर्यासः सुसूक्ष्मेण केनापि हेतुना निष्प-न्नोपि न ह्यनृतं सत्यवद्भवति ॥ बलिर्दानेन संबद्ध इति न लोभस्योत्कर्षः कदापि संपद्यते ॥ यदुक्तं 'कार्यगत्यनुरोधे-नानृतमपि विशिष्यत' इति । तदेतदर्थतंत्राणामतिसाहसं ध-र्मप्रधानाः प्रशमायना न सहंते ॥ शुभान्यशुभानि वा क-र्माणि कृतानि कायेनाभ्युदितानि वाचा चिंतितानि मनसा जलतरंगसंगततैलबिंदुवद् विसृत्वराणि स्वोत्तरोत्तरविपुल-कर्मजनकानि भूत्वा सर्वथैव कर्तारं भजंते ॥ अनृतं हि मह-त्पातकं श्रेयोविघातकं सर्वस्य ॥ ऐतरेयारण्यके 'तस्मादनृ-तन्न वदेद्दयेतत्वेनेनेति सर्वथा निंदत्यनृतम् ॥ अर्थकेवलिभिः पुनराद्रियंते खल्वन्येपि धर्मविद्विष्टा औपनिषदाधिकरणोक्ताः काणकुष्ठादयो योगाः । अर्थशास्त्रनिर्दिष्टाः विवाहबंधमोचना-

दयो लोकस्थितिहेतव इति तदभिप्रायेण यथार्थधर्मनिर्वाहो नैव भवेत् । तदुपेक्ष्यमेव । तस्मात्सत्यमेव परमं वदंति ॥ दमो नाम बाह्येंद्रियनिग्रहः । निगृहीते खल्विंद्रियग्रामे सर्वसंपदां भाजनं भवति पुरुषः । सर्वधर्ममूलं हि दमः । यदर्थमेव कृच्छ्रचांद्रायणादयो नियमाः प्रक्लृप्ताः ॥ नियमाध्ययनस्य वृद्धोपासनायाश्च दम एव फलम् । अदांतः पुरुषः सर्वक्लेशभाजनं भवति । इंद्रियारामा दांडक्यादयो विनष्टा इति प्रथितमेव । दमप्रभवा एते धृतिदाक्ष्यसाम्यार्जवमार्दवप्रियवादिताऽकार्पण्यसंतोषादयो महागुणा मंडयंति पुरुषप्रकांडम् ॥ सारस्वतप्रथमावतारभूमिर्वल्मीकजन्मा महामुनिः श्रीरामायणयुद्धकांडे प्रतिपादयति 'इंद्रियाणि पुरा जित्वा त्रैलोक्यं जितवानसी' ति ॥ अतः दम एव दोषानुषंगिणावप्यर्थकामौ धर्मानुबंधिनौ विदधाति ॥ संतोषो नाम दैवाल्लब्धेन पर्याप्तिबुद्धिः । येन केनापि संतुष्टस्य यत्सुखं तदेतदुपर्युपरि मनोरथमनुकामयमानस्य तदलाभात्क्लिश्यतः दुरापूरेण कामेन नष्टबुद्धेः पुरुषस्य कुतः स्यात् ॥ असंतोषप्रभवा इमे रागद्वेषभयक्रोधश्रम शोकमोहादयो दोषाः पुरुषस्य तेजोदाक्ष्ययशःप्रमुखान् पुरुषार्थसाधनहेतुभूतान् विनाशयंति शुभगुणान् । यथा नैराश्येन मनसः प्रशांतिर्न तथा दुराशासंपादितैरर्थैरिति मंक्तिरनु-

जगौ महाभारते ।। ययातिरपि उपभोगेन कामो न शाम्यति किं तु परित्यागेनैव शाम्यतीति भागवते जगाद ।। एवमन्ये शुकादयोप्यसंतोषं विनिंदंतो नैराश्यं परमं सुखमिति व्यवस्यंति ।। संतोषस्य फलमद्रोहः ।। अक्रोधो नाम सत्स्वपि क्रोधहेतुषु परेषामाक्रोशाभिघातादिषु समुत्पातितस्य क्रोधस्य क्षमयैव निरासः । अक्रोधेनैवमैत्रीप्रमुदितादयो महात्मभिरप्यलभ्याः भूयांसो गुणाः लभ्यंते ।। क्रोधोच्चलद्गात्रस्य भ्रुकुटीभीषणमुखस्य भूतवित्रासोः गुरुतिरस्कृतिरात्मोपघातः प्रद्वेषोऽवाच्यजल्पनमित्यादयः सर्वप्राणिविद्वेषहेतवो दोषास्समुद्भवंति श्रेयांसि प्रतिबध्नंति पुरुषस्य ।। अक्रोधनः शुभलक्षणः पुमान् मंगलमायतनं लक्ष्म्याः । अतः पुरुषार्थसाधकस्य अंतरंगतमः क्रोधक्षयः ।। शमो नाम अंतरिंद्रियनिग्रहः । येनैकेन बलवदभ्यस्तेन त्रिवर्गसिद्धिः स्वयं वृणुते पुमांसम् । यदर्थमेव मुनयो गिरिगुहाग्रावाणमधिशिश्यिरे ।। यदर्थमेव यतंते चतुराश्रमिणोपि ।। यदर्थनिबंधनाः निखिलाम्नायमौलिमीमांसारंभाः ।। तादृक्शमस्य लाभ एव पुरुषार्थलाभ इति प्रभिन्नप्रस्थानानामपि विदुषामेकं मतम् । नारायणीय–याज्ञिक्युपनिषदि समाम्नायते 'शमेन शांताश्शिवमाचरंति' इति । सैषा शमप्राप्तिर्बहुसाधनापेक्षिणीति प्रवृत्ताः शास्त्र-

नियमाः कामचारकामवादकामभक्षादीन् अत्यंतं निषेधंति। दिङ्मंडलजयिनो महावीरास्तपस्विनो महर्षयः सर्वस्वदातारस्सत्पुरुषाः सदसस्पतयोपि मनीषिणः शमसंपदमनुपलभ्य विफलायासास्संवृत्ताः ॥ अत एव भगवती श्रुतिरपि 'शमो भूतानां दुराधर्षम्' इति प्रतिपादयति ॥ भगवानपि (गीता ६ अ.) 'मनो दुर्निग्रहं चल' मित्यभिभैति ॥ तन्निग्रहोपायाश्च अभ्यासवैराग्यादयस्तत्रैव प्रतिपादिताः ॥ किं बहुना तेनैकेन शमाभिधेन सर्वधर्महेतुना भुवनभूषणा भवंति महापुरुषाः ॥ स एव सकलपुरुषार्थहेतुः ॥ अप्रदत्तानुपादानम् अस्तेयम्। बहिरंतःशुद्धिः शौचम्। आपन्नार्तिपरिहारो दया। पात्रेभ्यः प्रतिपादनं दानम्। चित्तस्य निर्विकारः क्षमा। एत एव धर्माः सर्वमानुषसाधारणाः। यैरेतैर्विदुरादयः शूद्राः पापयोनयो धर्मव्याधादयश्च पूतात्मानो महापुरुषतां प्राप्ताः ॥ एतैर्धर्मैर्विरहितानां त्रैवर्णिकानामपि वर्णाश्रमविहितधर्मो न गुणाय कल्पते ॥ यागः अध्ययनं दानं तपः इत्येते चत्वारो धर्ममार्गाः कैश्चिद्दंभार्थमपि सेव्यंते ॥ सत्यं दया क्षमा अलोभ इति चत्वारो महापौरुषिका एव धर्माः ॥ महाभारते आरण्यपर्वणि युधिष्ठिराजगरसंवादे अयमेवार्थः सम्यक्प्रपंचितः। तस्मादेते सार्वजनिका धर्मा निखिलश्रेयोभ्युदयहेतवो महापुरुषैरभ-

मत्तैस्ससेविताः पुरुषार्थफलं साक्षात्परपरया वा समुपन-
यंति ॥ यथा त्रैवर्णिकविषयाः विशिष्टधर्मास्साक्षान्निश्रेयस-
करास्तथा ताव्याख्यास्यामः॥ ब्राह्मणस्याध्ययनयजनदानानि
साधारणो धर्मः । अध्यापनयाजनप्रतिग्रहाः विशिष्टो धर्मः ।
क्षत्रियस्य युद्धाभिनिवेशः प्रजापालनं विशिष्टः । वैश्यस्य वा-
र्ताश्रयणं विशिष्टः । अध्ययनयजनदानानि सर्वेषां साधा-
रणः । शूद्रस्य सेवैकैव । त्रैवर्णिकाः स्वस्वविहितेन धर्मेणैव पू-
तात्मानः परां सिद्धिमभियांति ॥ प्रतिजानाति भगवान् य-
दुनंदनो गीतायां (१८ अ.) 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विं-
दति मानव' इति ॥ त्रैवर्णिकानां ये ये धर्मा विहितास्तेपि दे-
शधर्मजातिधर्मकुलधर्मादिभेदेन बहुधा विभिन्ना महाजनैरनु-
मताश्च ॥ शिष्टाचारप्राप्तस्याप्युपादेयतामंगीकृत्य लोकविद्विष्टं
धर्म्यमपि नाचरेदिति मन्वादयो न्यरूपयन् ॥ शिष्टसांप्रदा-
यिका अपि देशकालानुकूलाः वृत्तिलोपभिया प्रवृत्ताः पुरु-
षार्थाविरोधिनः जनोपकारका भवंति ॥ यथौत्तरीयाणां स-
मुद्रसंयानं ब्राह्मणानामायुधग्रहणादिकम् ॥ दाक्षिणात्यानां
मातुलकन्यापरिणयो यातयामान्नभोजनादिकं च देशाचारा-
त्प्रवृत्तम् ॥ तत्र देशाचार एव प्रमाणम् ॥ धर्मशास्त्रेषु तेषां
पातकेषु परिगणनात् ॥ एवं स्थितेपि अविगीतशिष्टाचारप्र-

वृत्ताः श्रुतिस्मृत्यनुज्ञाता एव धर्माः श्रेयसे कल्पंते नेतरे । उक्तं च मनुना (१ अ.) 'आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव चे' ति ॥ ब्राह्मणानां विहितेषु कर्मसु यजनाध्यापनदानानि निष्कामकृतानि मोक्षसाधनानि ॥ सकामानि प्रवृत्तिलक्षणानि ॥ अध्यापनादीनि वृत्त्यर्थकानि ॥ आपदि वृत्तिकार्शितस्य ब्राह्मणस्य प्रत्यनंतरवृत्तिग्रहणमप्यनुज्ञातं शास्त्रवचनैः । प्रत्यनंतरवृत्त्याश्रयिणो ब्राह्मणा भोगलोलुपा अर्थैकवलिनः कामात्मानो ब्राह्मण्यलक्षणाच्च्यवंते च्युतानां पुनर्वर्णसांकर्येण वर्णाभिव्यंजकलक्षणमपि संकीर्णप्रायं ह्रसति ॥ एवं क्षत्रियादीनामपि ॥ एवं संकीर्णवृत्तिभिरर्थकामपरैर्वादिको धर्मस्त्वः यथान्यथायुक्तिबलादुन्नीतः स्वरूपहानिमापद्य पुरुषार्थसाधनाय दुर्बलः संवृत्तः ॥ शास्त्रनिर्दिष्टवर्त्मना स्ववर्णाश्रमधर्मा अनुष्ठेयाः ॥ आश्रमाश्चत्वारः । तेष्वाद्यं ब्रह्मचर्यमेव । आश्रमांतराणां तन्मूलानां पुरुषार्थानां च निदानं वेदग्रहणव्रताचरणं ब्रह्मचर्यम् । तच्च गर्भाधानादिभिर्वैदिकैस्संस्कारैस्संस्कृतस्य यथाकालं विहितोपनयनस्य द्विजन्मनो विहितम् । उपनयनं नाम विद्यार्थस्य श्रुतितस्संस्कारः । उपनीतो ब्रह्मचारी गुरुकुलमधिष्ठाय वेदग्रहणांतं यथोक्तनियमेन वर्तमानो द्वितीयाद्याश्रमयोग्यो भवति । त्रिवर्गसाधनाय ये य गुणा-

स्समपेक्षितास्ते सर्वेऽपि ब्रह्मचर्ये यथोक्तनियमवता पुरुषेण ल-
भ्यंते । नवे वयस्याहितस्संस्कारो गुणोपचयाय संपद्यते ।
रागादिभिरमलिनायां चित्तवृत्तौ सदुपदेशाः प्रतिफलंति ।
यथोक्तनियमाविधुरः फले दुर्विधो भवति । यावज्जीवमनुभू-
यमानत्रिवर्गस्य मूलं ब्रह्मचर्यम् । अनेनोपचितदृढशरीरस्या-
लंकर्मीणस्य प्रसन्ने चेतसि प्रज्ञाप्रतिभादयः स्वयमुत्पद्यंते ॥
नियमानभ्यस्यतः क्लेशसहिष्णुता सुखदुःखसंवेदनं भूतमैत्री
प्रमुदिता इंद्रियजयः संतोषः परोपकृतिरुपशांतिरकार्यान्नि-
वृत्तिरनालस्यं सन्नतिरिति सर्वार्थहेतवो गुणास्संभवंति । यः
पुमानायुषि यं यं कामं कामयेत तमैहिकामुष्मिकं वा समधि-
गंतुं शास्त्रोक्तनियमचारी ब्रह्मचारी शक्नुयात् ॥ यद्यपि प्रा-
चामिव यथोक्तनियमानुष्ठानं कालदेशविपर्यासेनाधुनातनानां
दुष्करं तथापि 'यावच्छक्यं तदाचरे' दित्येवं महर्षयो वि-
हितं षट्त्रिंशदाब्दिकं ब्रह्मचर्यं वेदग्रहणांतं वेति संकुच्य निरू-
पयामासुः ॥ नियमवान् ब्रह्मचारी सर्वदा गुरुशुश्रूषया प्र-
तिषिद्धपरित्यागेन यथाकालप्रबोधेन अखंडितब्रह्मचर्येण च
समिध्यमानब्रह्मतेजसा ज्वलन् श्रेयोविघातकान् प्रमादाल-
स्यजाड्यादीन् विजेतुं सांयुगीनो भवति ॥ अग्नींधनभैक्ष्यच-
र्यादयो ब्रह्मचारिनियमास्तेजोयशःप्रज्ञामेधायुष्यादिकं वर्ध-

यंति ॥ अतस्समाचरितब्रह्मचर्यो भवति त्रिवर्गभाजनम् ॥ एवं ब्रह्मचारी वेदशास्त्राभ्यासादिना विज्ञातोभयलोकतंत्रः गार्हस्थ्यमाश्रित्य श्रुतिसमुदितमैहिकं पारलौकिकं च धर्ममाचरेत् ॥ गार्हस्थ्यं नाम श्रुत्युदिताग्न्याधानादिकर्मनिर्वहणयोग्यतासंपादकम् । संतत्या पितृऋणापाकरणं प्रधानं फलं गार्हस्थ्यस्य । तथाच याज्ञिक्युपनिषदि श्रूयते 'प्रजननं वै प्रतिष्ठा लोके साधु प्रजायास्तंतुं तन्वानः पितृणामनृणो भवति इति ॥ स एष गृहस्थाश्रमस्त्रिवर्गावापक्षेत्रं यस्मिन्नुप्तानि त्रिवर्गबीजानि फलंति ॥ धर्माविरुद्धयोरर्थकामयोर्गार्हस्थ्यमेव जन्मभूमिः ॥ तदिदं सर्वेषां प्राणिनामुपजीवनम् । अत एव मन्वादिभिरस्यैवोत्कर्षः प्रतिपादितः । महाभारते शांतिपर्वणि मुनिशकुनिसंवादरूपाख्यायिकामुखेनास्यैव प्रशंसाभिधीयते ॥ ब्रह्मचर्यादेव प्रव्रजतः कुमारानुद्वीक्ष्य शक्रः शकुनिरूपस्तान्निवर्तयितुकामः प्रावोचत् 'अये कुमाराः विघसामृताशने परित्यज्य प्रव्रजतां भवतां कुतश्चित्तशुद्धिः । ऋणान्यनपाकृत्य कथं मुमुक्षवो भवथेति ॥ कृतदारसंग्रहस्य स्वेषां परेषां वा योगक्षेमनिर्वहणाय अप्रतिषिद्धावर्थकामौ यावदर्थं जुषमाणस्य साधीयान्पुरुषार्थलाभः स्यात् । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति श्रुत्या देवर्षिपितृणापाकरणमावश्यकं भा-

वति ॥ ऋणं नाम मद्वंश्यास्सर्वे वेदाभ्यासादिकं नोल्लंघयेयुरिति बलवदनुशासनम् ॥ अधीतवेदः ऋषीन् आहिताग्निर्देवान् कुलतंतुना पितॄंश्च प्रीणयन् कृतकृत्यो भवति । देवर्षिपितृभूतानि नित्यमन्नादिसंविभागेनाराधितानि श्रेयांस्याशासते गृहस्थस्य । गीतासु 'एतेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्' इति(३अ.) भगवान् निरूपयामास । यज्ञस्य स्वार्थपरित्यागपूर्वकपरोपकृतिः फलम् । ते च ब्रह्मयज्ञदेवयज्ञपितृयज्ञमनुष्ययज्ञभूतयज्ञसंज्ञकाः पंच ॥ शतपथब्राह्मणे 'पंच वा एते महायज्ञाः सतति प्रतायंते सतति संतिष्ठंत' इति आम्नातम् । सर्वेषामपि यज्ञविधीनां तत्तत्कर्मोचितानेकावांतरक्रियाकलापरूपाणामपि पुरुषार्थसाधनोपयोगी कश्चित्परमार्थो निगूढो विज्ञायते । यजेर्देवपूजादानाद्यर्थकत्वेन यज्ञशब्दस्यापि यथासंभवं दानादिकमर्थः । ब्रह्मयज्ञो नाम अध्ययनमध्यापनं च । अनुष्ठीयमाने कर्मणि विधिप्रतिषेधज्ञानमावश्यकम् । तदर्थमध्ययनं च । अनधीतवेदः प्रमाद्यति स्वकर्तव्यतायाम् । अध्यापनस्य च अनभिज्ञानां कर्तव्यतोपदेशः फलम् । अतो नित्यानुष्ठेयो ब्रह्मयज्ञः स्वस्य च परेषां चोपकुरुते नित्यहोमेन तर्पणेन च समाराधितैर्देवैः पितृभिश्च परमनुगृहीतः संवर्धते । देवाः पितरश्च भौमेन पथा निगूढं संचरमाणाः क्रियावतः

पुरुषस्य कामानापूरयंति। तैर्दत्तैरर्थैस्तानेवाराध्य श्रेयो विंदते विघसामृताशी सर्वकिल्बिषात्प्रतिमुच्यते। देवयानेन पितृयाणेन वा स्वकर्मवशात्संचरमाणस्य तदनुग्रहेण त्रैलोक्येपि सुखलाभः स्यात्। यस्तु स्वोदरपूरणायैव पचति नार्थिभ्यस्संविभजते स पापीयान् भवति श्रेयसा च वियुज्यते॥ भगवता संदर्शितोयमर्थो गीतायां 'भुंजते तेत्वघं पापा' इति। अतो दैवाल्लब्धेन देवपितृयज्ञावनुष्ठेयौ। अतिथिसत्कारो मनुष्ययज्ञः। सुविदितमेतत्सर्वेषां गृहागतानां महीयसां सत्कारैर्दुर्लभस्याप्यर्थस्य लाभः स्यादिति। रंतिदेवालर्कशिबिप्रमुखैः परमादरेण प्रदर्शितोयं पंथाः कस्य वा धर्मिष्ठस्य नाभिमतः स्यात्। अनेन महायज्ञेन अहरहराचरितेन सर्वेषां दयनीयः कौटुंबिकः सर्वक्लेशानुत्तरति॥ स एष महायज्ञः स्वल्पेनापि तृणजलसूनृतादिना निष्पाद्यते। गार्हस्थ्यमाश्रितेन सर्वभूतदयालुना भाव्यम्। यथाशक्ति प्राणिनामुपकुर्वाणः आर्तानामार्तिहरः सर्वभूतांतरस्थमात्मानं समाराध्य स्वात्मोद्धाराय प्रभवति। कविरभिधत्ते 'सदुपकारफलां श्रियमर्थिन' इति। स एष सर्वार्थसाधको मनुष्ययज्ञः। भूतयज्ञो नाम आश्वपचमा च कीटपतंगेभ्यो भूतेभ्योऽन्नादिसंविभागः। स्वाश्रितभरणं हि साधीयान्धर्मपन्थः। अनभ्यवहारदूनेषु स्वाश्रितेषु कस्य वा सचेतन-

स्यात्मा परितुष्यति । तिरश्चामपि भूताराधनप्रवृत्तिर्दृश्यते क-
पोतलुब्धकोपाख्यानेन महाभारते । कश्चित् कपोतो गृहागतं
लुब्धकमपि स्वैर्मांसैरन्यैर्मंत्रयदिति । प्राणिनां क्षुत्पिपासादि-
जनितदुःखं स्वानुभवेन विजानन् रंतिदेवः कतिचिद्दिनान्युप-
वसन्नपि दैवाल्लब्धं जलमन्नं चार्थिभ्यः प्रायच्छदिति च । त
एते सर्वेपि महायज्ञा अर्थमूलाः ॥ अर्थो नाम व्यवहारोपयोगी
चराचरात्मको वस्तुविशेषः । अर्थेन विहीनस्य सर्वाः क्रिया
व्युच्छिद्यंते । अनधिगतार्थः पुमानणुमात्रमपि दातुं भोक्तुं च
न पारयति । इष्टापूर्तानि कर्माणि बहुद्रव्यसाध्यानीति बहुधा
प्रपंचितं शास्त्रेषु । तत्र सप्तविधा अर्थागमास्त्रैवर्णिकानां य-
थायोगं विहिताः । अदुष्टः प्रतिग्रहः । कुलानुगतं धनम् ।
निध्यादीनां लाभः । क्रयविक्रयोपार्जितः । विजयलब्धः ।
कुसीदलब्धः । कृषिवर्धितश्चेति ॥ अत्र त्रैवर्णिकानां वृत्तिध-
र्मतया यो विहितोर्थाधिगमः स श्रेयान् । वृत्तिकर्शितस्य
सीदत्कुटुंबस्य धर्मादनपेतः प्रत्यनंतरवृत्तिलब्धोपि विहितः ।
संपन्नः पुनर्वृत्त्यंतराश्रयणेन दूषितो भवति । आपदि "विद्या
शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः । धृतिर्भैक्ष्यं कुसीदं
च दश जीवनहेतव" इति मनुरब्रवीत् ॥ एतेपि मनुष्याणामत्यं
तापदि धर्म्याः । एतेषु यथायोग्यं वर्तमानस्त्रैवर्णिकाः स्व-

धर्मान् आतिष्ठेयुः । आपदनापद्विषयौ देशकालानुगुण्येन व्यवस्थितौ । तत्रापि तारतम्येन कांचन पौरुषेयीं व्यवस्थामवलंब्य धर्मे प्रयतेरन् । यद्यंतरा कामलोभादयो नापतेयुः तदा शास्त्रोक्ता विधयोपि सफला भवेयुः । इदानीं तादृशानां विधीनामात्यंतिको विलोप एव क्वचित्क्वचिदृश्यते । तादृशलोपस्य केवलकामलोभादय एव हेतवः ॥ त एते श्रेयःपरिपंथिनो विद्वांसमपि धीरमपि सचेतनमपि बलादाक्रम्य खलीकुर्वंते ॥ एतैराक्रांतचेतसां सर्वा अपि विधिचोदिताः क्रियाः कृता अपि निष्फला भवंति ॥ तस्माद्यथा नावस्कंदेयुरिमे लोभादयो नाभिभवेयुर्दोषा रजस्तमःप्रभवा नाक्रामेयुरपयशांसि पुरुषं तथा विधिप्रतिषेधौ निदर्शयंति शास्त्राणि ॥ शास्त्रविध्युल्लंघने दोषमपि भगवान् (गीता१९अ.) न्यरूपयत् 'यः शास्त्रविधिमुत्सृज्य' इत्यादि । श्रद्धा वित्तं विधिरिति श्रेयोभ्युदयहेतवः शास्त्रनिर्दिष्टा नोल्लंघनीया लेखामात्रमपि । अतो वृत्तिकर्शिता द्विजातयो मनूक्तेषु दशविधजीवनहेतुष्वपि येनात्मापकर्षो न भवेद्यदालंबनेन कुलधर्मा न विपद्येरन् येनांतरात्मापि प्रमोदेत तमेव जीवनहेतुमाश्रित्य यावदर्थपरिग्रहाः स्वधर्मानातिष्ठेयुः । अन्यथा विद्येति मद्यसंधानावरोहणं लाभ इति न्यासहरणं शिल्पमिति कृत्तिसीवनं कुसीदमिति चक्रवृद्धिग्रहणं सेवेति

नीचोपसर्पणं विपणिरिति विगीतवस्तुविक्रयो वृत्तिरित्युच्चा-वचकर्मारंभश्चैते पुनर्द्विजन्मनां नाशहेतवः ॥ विगीतवृत्त्या वृत्ति-सांकर्यं तेन वर्णसांकर्यं ताभ्यामात्मापकर्षस्तैरधोधःपात इत्य-नर्थपरंपरा प्रसज्येत ॥ तस्मादभिजातः पुमानात्मोद्धारायैव प्रयतेत नैवात्मनिपाताय । अनुशास्ति यदुनंदनो गीताशास्त्रे 'उद्धरेदात्मनात्मानं नात्मानमवसादये' दिति ॥ तस्माद्विहि-तैर्वृत्तिधर्मैरास्थितलोकयात्रः सुखमेधते । उक्तैर्दशविधजीवन-हेतुभिः सप्तधनागमैश्च समुपार्जितेन वित्तेन नित्यनैमित्तिकानि निर्वर्तयन् पंचमहायज्ञान् यथाशक्ति समाचरेदन्यथा समधि-कार्थलोभेन पापीयान् भवति । इतिधर्मरहस्यम् ॥

अर्थतंत्राः पुनरेतन्न क्षमंते ॥ यथाकथंचिदर्थलाभ एव पुरु-षार्थः । धर्मकामावपि तदधीनौ । तद्विहीनस्य तेजो धृतिर्दाक्ष्यं महापौरुषिकत्वमित्यादयः सर्वजनाभिनंदनीया गुणा विली-यंते । व्यर्थः कुटुंबभरणाकल्पः सर्वैः परिभूयमानो न शर्म लभते । नास्त्यर्थवतामसाध्यं नाम । अतः कौटिल्यकामंदका-दिभिरुपदिष्टमर्थशास्त्रमर्थागमनिदानमिति मन्वानाः अर्थोपा-र्जनाय प्रवृत्ता अर्थार्जनरक्षणवर्धनादिष्वेवाप्रमत्ता दिवानिशं प्र-यतंते । काणवराटिकाव्ययमप्यसहमानानां येषामभीक्ष्णध-नागमचिंताशबलिताधियां वितस्तिमात्रोदरपूरणाय व्यायितप्र-

स्मृतिपरिमिततंडुलं तत्पाकव्ययितेंधनसंचयं च विलिख्य विलिख्य भृशं निःश्वसतां न धर्मो नापि वा भोगः संपद्यते वृथासंचितेनेति केचन तदसत्। अर्थपूर्वास्सर्वे समारंभाः। तस्मादर्थवृद्ध्यै क्षयव्ययपरिवर्तनप्रतिबंधापहारोपभोगादीनर्थापचयहेतूनपास्य कृषिपाशुपाल्यशिल्पविद्याप्रमुखान्यर्थोपचयसाधकानि संवर्धयेत् । यद्यत्र सामयिकाचारधर्मशास्त्रादिनियमभंगःस्यात् तदा तत्संकोचेनैव व्यवहरेत् । देशकालानुरोधेन धर्मशास्त्रार्थशास्त्रयोः संकोचविकासौ संभवतः । येन केन वा निमित्तेन स्वार्थोद्धारः प्राज्ञलक्षणं तद्भ्रंशो हि मौर्ख्यम् । नित्यमुत्थानवतार्थाधिगमायैव प्रयतितव्यम् । प्रचुरधनवतामेव यज्ञदानादयः कामोपभोगादयश्च सेत्स्यंते । धनविहीनानामग्निहोत्रादिकमपि निंदति श्रुतिः । संचितधनानामेव सोमपानार्हतां मनुरनुजानीते ॥ यदि कुटुंबिनां यावत्कुटुंबभरणपर्याप्त्यधिकं धनं विद्यते तदा दानादिषु प्रवृत्तिर्भवति । यानासनशयनोल्लोचभवनादिकामोपसाधनान्यर्थमूलानि पुरुषमनुरंजयंति । धर्माय यशसेर्थाय कामाय स्वजनाय च पंचधा संविभज्य यथायोग्यमर्थमुपजुषाणः पुरुषार्थमुपचिनोति । अर्थाधिगमाय प्रयतमानानां कथंचिद्धर्मलोपसंभवेपि प्रचुरधनसाध्यैः प्रायश्चित्तैः स दोषः शाम्यति । निंदंति च स्वानर्थकारणं धर्ममपि-

बह्वृचाः ॥ पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति । धनाद्धर्मस्त-तस्सुखमित्यभियुक्तोक्त्या च धनं धर्ममूलम् ॥ तस्माद्धर्मका-मयोरर्थानुबंधिनोः पुरुषार्थत्वमर्थादेवेति तमेव प्रधानं मन्यंते पुरुषार्थम् ॥ केमे धनलाभमोहाभ्यां संतापितहृदयाः काण-वराटिकाकिराटाः क ते सुकृतिनस्सर्वस्वदक्षिणादातारो महा-धीरा धर्मगोप्तारः । न संभावितमेव धर्मविधुरयोरर्थका-मयोः पृथक्पुरुषार्थत्वम् । सर्वलोकनिंद्यास्ते अर्थकामपरमा लुब्धाः कामिनश्च । अर्थतंत्राः केचन न विजानंति तमेतं परमार्थम् । यदिह लोके स्यंदनप्रवेक्षकैरश्वरत्नैर्मदालसमदा-बलैर्विहारवीथीषु विचरंति श्रीमंतस्सुकृतिनस्तदेतद्दानविल-सितमिति ॥ यदिह सुखिनोऽस्पृष्टक्लेशलेशाः संपन्नसर्वमनोरथा विराजंते तदेतद्धर्मवैभवमिति । यदिह वसुंधरायां यशस्विनो दयालवः सर्वजनश्लाघ्यमानदिव्यमाहिमानः सुकृतभागिनः सर्वभूतान्यावर्जयंति तदेतत्पूर्वकृतपरोपकारफलमिति च । किंबहुना? तुल्यश्रुतधरास्तुल्योद्योगिनोप्यपुण्यभाजो न ल-भंते काकिणीमपि ये पुनस्सुकृतिनः संचिन्वते सर्वमप्यभी-प्सितमर्थमनायासेन ॥ एवं दृष्टश्रुतानुभूतैर्लिङ्गैर्धर्म एवानु-मीयते ॥ श्रुतिरपि 'धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पंती' ति धर्मधर्मवतोः प्रशंसामभिधत्ते ॥

दिना विहितं कामं प्रशंसत्येव ॥ कामोहि द्विविधः । प्रवृत्ति-जनको निवृत्तिजनकश्चेति । स्वर्गादिफलाभिलाषेणानुष्ठितानि कर्माणि पुनर्जननहेतुतया बंधकारणानि भवंति । यानि नित्यनैमित्तिकानि कर्माणि सत्वसंशुद्धिकामैरनुष्ठीयंते स काम आत्मज्ञानसहकारितया मोक्षाय कल्पते प्रशस्ततरश्च भवति ॥ पूर्वोक्तं द्वैविध्यमप्यधिकारिभेदाद्भिद्यते । अधिकारिणः पुन-र्विभिन्नेच्छानियंत्रिताः कर्मवासनया स्वस्वाभिमतेषु प्रवर्तंते । नचैकस्मिन् विषये समानधर्माणः पुरुषाः ॥ तमेतमर्थं छंदोगा अनुश्रावयंति ' स यदा पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठंती ' त्यादिभिः । एतदविरोधी धर्ममूलः विधिविहितश्चेंद्रियप्रीतिहेतुः स्रक्चंदनवनितालिं-गनादिरूपश्च कश्चिदभ्यनुज्ञायते मुनिभिः ॥ उत्सिक्ताना-मिंद्रियाणां विषयरसास्वादवैरस्यप्रदर्शनद्वारा निग्रह एवात्र विवक्षितः । नतु तदैकांतिकत्वम् । इंद्रियाणि विषयाणामसेवया नियंतुमशक्यानि भवंति ॥ अनुभूतास्वादानि न जहत्येव विषयरसम् । सर्वथा दुश्शकमेवात्र तदभ्यनुज्ञामात्रमपि । चप-लानींद्रियाणि यदि विषयप्रवणानि तदा प्राज्ञस्यापि प्रज्ञा परिभूयते । प्रज्ञाविधुरो न शक्नोति युक्तायुक्तचिंतायामपि मनस्समाधातुम् । अविवेकिनः कायवाङ्मानसैरपराधैरधः-

विद्विष्टत्वाच्च साधुभिर्निंदितत्वाच्च धर्मप्रमावचनैः। यो हि केवलेच्छासमारब्धे वस्तुनि विगीते प्रवर्तते तस्येंद्रियचपलस्य नायं लोकोऽस्ति ॥ बहुप्रकाराः कामशाखाः पुरुषप्रदानं बलान्निपातयंति। नहि कामादन्यत्रैवंविधो निपातहेतुरुप लभ्यते। बहवो विशिष्टमतयः खलीकृताः खल्वनेन। विनाश एवास्य फलम्। भगवता गीतायामुपदर्शितं (२ अ०) ये ये दोषाः पुरुषार्थविरोधिनस्ते सर्वेऽपि कामप्रभवाः। सौभरिप्रमुखा मुक्तसंगा अपि केनापि हेतुना संभूतेनानेन स्वसिद्धिं परित्याजिताः। सैषा कथा विष्णुपुराणे संदर्शिता। सौभरिर्मुनिः संगभीतो जलांतर्निमग्नस्तपश्चरन् कस्यचन मीनस्य कौटुंबिकव्यापारेण विकृतचेताः पंचाशन्मांधातृदुहितॄरुद्वहन् चिराय विषयसुखांतरितविवेक आसीदिति। आस्वादितविषयरुचिरिंद्रियगणो नोपारमति विषयेभ्यः॥ न द्वितीयः। बंधहेतुतया दूषितत्वादाचार्यैः॥ जन्ममरणलक्षणस्य संसारस्य वासनारूपेणावस्थितः काम एव निदानम्। तस्मान्न पुरुषार्थः काम इति॥ आस्तामयं विवादशीलानां विवादः। सुप्रयुक्तः कामः पुरुषार्थ एव। 'कामात्मता न प्रशस्ते' त्यादिना मनुर्विगीतं कामं निषेधति नतु शास्त्रविहितं कामम्। तेषु 'सम्यग्वर्तमान' इत्या-

दिना विहितं कामं प्रशंसत्येव ॥ कामोहि द्विविधः । प्रवृत्तिजनको निवृत्तिजनकश्चेति । स्वर्गादिफलाभिलाषेणानुष्ठितानि कर्माणि पुनर्जननहेतुतया बंधकारणानि भवंति । यानि नित्यनैमित्तिकानि कर्माणि सत्वसंशुद्धिकामैरनुष्ठीयंते स काम आत्मज्ञानसहकारितया मोक्षाय कल्पते प्रशस्ततरश्च भवति ॥ पूर्वोक्तं द्वैविध्यमप्यधिकारिभेदाद्भिद्यते । अधिकारिणः पुनर्विभिन्नेच्छानियंत्रिताः कर्मवासनया स्वस्वाभिमतेषु प्रवर्तंते । नचैकस्मिन् विषये समानधर्माणः पुरुषाः ॥ तमेतमर्थं छंदोगा अनुश्रावयंति 'स यदा पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठंती' त्यादिभिः । एतदविरोधी धर्ममूलः विधिविहितश्चेंद्रियप्रीतिहेतुः स्रक्चंदनवनितालिंगनादिरूपश्च क्वचिदभ्यनुज्ञायते मुनिभिः ॥ उत्सिक्तानामिंद्रियाणां विषयरसास्वादवैरस्यप्रदर्शनद्वारा निग्रह एवात्र विवक्षितः । नतु तदेकांतिकत्वम् । इंद्रियाणि विषयाणामसेवया नियंतुमशक्यानि भवंति ॥ अनुभूतास्वादानि न जहत्येव विषयरसम् । सर्वथा दुश्शकमेवात्र तदभ्यनुज्ञामात्रमपि । चपलानींद्रियाणि यदि विषयप्रवणानि तदा प्राज्ञस्यापि प्रज्ञा परिभूयते । प्रज्ञाविधुरो न शक्नोति युक्तायुक्तचिंतायामपि मनस्समाधातुम् । अविवेकिनः कायवाङ्मानसैरपराधैरधः-

पातो भवति। अतः कामः किंरूपः किंलक्षणकः कानि वास्य स्थानानि किमधिष्ठानमिति दुरूहतरलमानसैरद्यापि विमृश्यते मनीषिभिः। नाद्यावधि कैश्चिदपि निर्णयो दत्तः। सर्वः कामपरतंत्रो लोक उच्चावचेषु कर्मसु प्रवर्तते स एव परमार्थ इति मन्यते च॥ किंबहुना। नैतादृशं संवननं प्राणिनां त्रिषु लोकेष्वप्यन्यदस्ति॥ अतो गुरूपदेशशास्त्रावगाहनन्यायनिष्णातमतिभिरस्य स्वरूपं सम्यगालोच्य यथानुषंगं धर्माविरोधेन प्रयतितव्यम्। विधिविहितः सतां संप्रतिपन्नः कामः पुरुषार्थ इति संपिंडितोर्थः॥ अन्योन्याबाधितत्रिवर्गमुपजुषाणो गृहस्थाश्रमे परमार्थमोक्षहेतुभूतपरिव्राजकधर्मसाधनाय वैखानसाश्रममवलंब्य तत्तन्नियमाननुष्ठाय मनो मोक्षे निवेशयेत्॥ गृहस्थाश्रमनिर्वर्त्यानि कर्माणि यथाविधि समाप्य कुटुंबभरनिर्वहणधुरीणेषु पुत्रादिष्वाहितभरो जराजीर्णमात्मानं तपसि नियोजयेत्। चिरानुभूतविषयरसमलिनं हि मनो नाल्पीयसा कारणेन विरज्यते यमैर्नियमैः सात्विकैराहारैः पराकचांद्रायणादिभिर्विषयवैराग्याभ्यासैरन्यैश्च देहवाङ्मनोदंडैः सर्वतः प्रतिरुद्धप्रसरं शनैर्निर्विषयकं भवति मनः। कामाशयं हि चित्तं चिराहितदृढतरविषयवासनया कलुषितं पुनःपुनरुच्चावचजन्मकारणं भवति॥

मानुष्यं हि स्वर्गापवर्गयोर्द्वारम् । सुकृतविशेषलब्धे तस्मिन्नात्मनो बंधमोक्षायैव प्रयतितव्यम् ॥ प्रशांतचेतसः कामसंकल्पशून्यस्यात्मानमनुसंदधानस्य संसरणानिवृत्तिः कदापि भूयादिति सर्वे वैखानसानियमाः प्रकल्पिता मुनिभिः । यथा युगांतरेषु सर्वे वर्णाश्रमधर्मा नियता आसन् न तथेदानींतनानां नियंतुं शक्यंते । युगभेदाद्धर्माधर्मयोर्वृद्धिह्रासौ स्वयमेव संभवतः । देशकालवयोद्रव्यादिभेदेन विभिन्ना पौरुषेयी व्यवस्थापि । शक्याशक्यविचाराधीनं हि करणीयम् । यावच्छक्यमात्मश्रेयसि प्रयतितव्यम् ॥ कुटुंबभरणलालनवर्धनादिचिंतया वा लोकानुसरणजीविकासंपादनव्यग्रतया वा केवलमायुषो व्ययेन न कश्चिदात्मोद्धारप्रयोजको लाभः संजायते । स्वार्थावबोधक्रियाऽकल्पेष्विंद्रियेषु कार्याक्षमेष्ववयवेषु चिंतासंतानसंदानितस्य तृष्णायष्टिमवलंब्य संचरतो यदि कदाचिदपिनोत्पद्यते विवेकस्तदा सुतरामेव न किंचिदपि प्रयोजनं स्यात् । अतः स्वहितमिच्छता पुरुषेण विवेकिना भाव्यम् । स च विवेको नित्यानित्यवस्तुविचार एव ॥ यत्रेदं सचराचरं त्रिगुणात्मकं जगदविद्यया भासते तन्नित्यं तदन्यत् सर्वमपि स्वाविद्याविजृंभितमनित्यमिति परीक्ष्य निर्वेदाद् गुरुमभिगच्छेदेव । तदनुग्रहेणासादितब्रह्मविद्यो ध्यानधारणादिभिर्योगैर्यावदात्मसाक्षात्कारस्तावन्न विरमेत् ॥ निष्पन्ने पुनरात्मदर्शने कृतकृत्यो भवति ॥ एतदर्थमेव

सर्वेऽपि विधिप्रतिषेधादयो धर्मशास्त्रेषु निरूपिताः ॥ सर्वे-षामपि धर्मनियमानां योगांतरायहेतुभूतषड्वर्गसंयमः फलम् । अन्यथा केवलं श्रमावहा एव ॥ देहाद्याभिमानो हि बंधहेतुः । सर्वोपि आढ्योहमभिजातः कोन्योस्ति मत्सम इत्यभिमन्यते स्वात्मानम् । अनेनैवाभिमानेन कामक्रोधलोभमोहदंभमदमा-त्सर्यादयः श्रेयोविरोधिनस्संभवंति । तन्निग्रहार्थमप्रमत्तः प्रयतेत । असंकल्पात्कामं कामनिग्रहात्क्रोधमर्थेष्वनर्थबुध्या लोभमात्मविद्यया मोहं साधुसेवया दंभं तत्वावमर्शेन मदं भूतसाम्येन मात्सर्यं च समूलघातं निहत्य शास्त्राचार्योपदेश-कुशलमतिर्धीरः श्रेयो विंदते । तत्वपरामर्शात् केवलसत्वयो गात् कर्मबीजपरिक्षयात् सतां सन्निकर्षाच्च योगः प्रवर्तते । ईश्वरप्रणिधानेन नानाविधजन्ममरणक्लेशप्रहाणकारणेन विग-लितान्यसंवेदनः स्वसंवेद्यमानंदं समश्नुते ॥ यद्यपि वर्णाश्रम धर्माः साकल्येन सर्वैरनुष्ठातुं न शक्यंते तथापि शास्त्रनिर्दिष्ट-वर्त्मना यत्रकुत्राप्याश्रमे वसन् सत्यास्तेयेंद्रियनिग्रहदयाभूत-साम्यादिभिः कल्याणगुणैः परां सिद्धिमधिगच्छति ॥ तदेत-त्परमकारुणिकेन योगेश्वरेण याज्ञवल्क्येन सम्यग्व्यवसितम् । यथा "न्यायागतधनस्तत्वज्ञानानिष्ठोऽतिथिप्रियः ॥ श्राद्धकृ-त्सत्यवादी च गृहस्थोपि हि मुच्यत" इति । तदिदं धर्मसर्वस्वं मुं-डकोपनिषदि प्रतिपाद्यते "परीक्ष्य कर्मचितान् लोकान् ब्राह्मणो निर्वेदमायादि"ति । "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति

च । “तमेतं ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाश्र-केन” इत्याद्यन्यत्रापि । तदेतत्सर्वमनुशासनं स्वकर्मवशाद्देवति-र्यङ्नरादिषु परिभ्रमतो जीवराशेरात्यंतिकसंसारोच्छेद एव परमः पुरुषार्थ इति निरूपणायैव प्रवृत्तम् । तत्साधनान्य-न्यानि त्रिवर्गसाधनान्यपि विहितानि । सर्व एते नियमा निवृत्तिप्रयोजका एव ॥ भागवत एकादशस्कंधे “ व्यवस्थि-तिस्तेषु विवाहयज्ञसुराग्रहैराशु निवृत्तिरिष्टेति ” प्रतिपादितम् । श्रुतयोपि “ त्यागेनैकेऽमृतत्वमानशु ”रिति प्रतिपादयंति । तस्मात्पुरुषार्थेषु मोक्ष एव श्रेष्ठइति व्यवसितमाचार्यैः ॥ वस्तुतस्तु सर्वेपि पुरुषार्थाः परस्परोपकारका यावदर्थपरि-ग्रहविधया संसेविता मोक्षाय संपद्यंते । शरीरवाङ्मनोभिः श्रद्धया विहितैर्विधयानुष्ठितैः कर्मभिरंतरात्मा प्रसीदति । प्रसन्ने तस्मिन् स्वस्वश्रद्धानुरूपान् भौमान् दिव्यांश्च कामान् यथाधिकारं पुरुषस्समश्नुते । इदमेव पुरुषार्थप्रयोजनम् । एतदर्थमेव विधिनिषेधात्मकं शास्त्रं प्रवृत्तम् ॥ नन्वस्तु धर्ममो-क्षयोरत्यंताप्राप्तयोर्विधायकं शास्त्रम् । रागप्राप्तयोरर्थकामयोः किं विधायकेन शास्त्रेणेति चेत्—रागप्राप्तेष्वपि नियंत्रणाभावे लोकवृत्तेरनवस्था भवेत् । अनवस्थितायां लोकवृत्तौ का प्र-सक्तिर्धर्ममोक्षयोः । अतो रागप्राप्तयोरपि तयोर्धर्मार्थं नि-यंत्रणमावश्यकमेव ॥ अतः शास्त्रमेव बलवदिष्टानुबंधिषु श्रे-योहेतुषु प्रवर्तयति निवर्तयति च बलवदनिष्टानुबंधिभ्यः श्रे-

योविघातकेभ्यः । भृग्वंगिरोमनुहारीतप्रमुखैरवितथवचनैर्लो-
कानुग्रहायैव गृहीतविग्रहैः स्वयमनुष्ठाय प्रदर्शितेन सत्पथेन
संचरंते साधवः ॥ संदिग्धविपर्यस्तबुद्धीनां रजस्तमःप्रकृ-
तीनामपि स एव साधुपथः श्रेयोभ्युदयहेतुः । तमिममर्थमाम-
नंति तैत्तिरीयाः । "अलूक्षा धर्मकामाःस्युः । यथा ते तत्रवर्तेरन् ।
तथा तत्र वर्तेथाः । एष आदेश " इति । इत्थं च स्वरूपानंदा-
विर्भावलक्षणो मोक्षः परमः पुरुषार्थः ॥ तदंतरंगसाधनं धर्मः।
इष्टापूर्तादिधर्मोपयोगितया अर्थः ॥ तदुभयाविरोधी धर्मप्र-
जासंपत्तिहेतुः काम इति ॥ पूर्वपूर्वापेक्षया प्रत्यवरीणधर्माप्ः
पुरुषार्थाश्चत्वारः सर्वेषां श्रेयोभ्युदयहेतवः प्रसिद्धाः ॥ यथा-
स्माभिरयमर्थः संगृहीतस्तथा भगवती श्रुतिराभिमुख्येनानुमो-
दते । गर्भाधानपुंसवनप्रमुखैस्संस्कारैः परिपूतशरीरस्य
द्विजन्मनोऽधीतवेदस्य कृतदारसंग्रहस्य यायजूकस्य क्रमेण
विषयपराङ्मुखचेतसः कर्मसहकृतशुद्धसत्वसम्पादितब्रह्मज्ञा-
नस्य सच्चित्स्वरूपेणावस्थितिरेव परमः पुरुषार्थस्त्रैवर्णिकानाम्।
तदितरेषां स्वस्ववृत्तिधर्मानाश्रित्य सर्वसाधारणैः सत्यास्तेया
दिभिर्वर्तमानानां पुण्योपचयसंपादितोत्तरोत्तरोत्कृष्टजन्मला-
भद्वारा श्रेयोलाभो भविष्यतीति प्रतिपादनायैव कल्पविधिमं-
त्रार्थवादमीमांसान्यायसांख्यधर्मशास्त्रपुराणेतिहासादि निबंध-
नारंभास्सर्वेऽपि सफलाः ॥

॥ इति श्रीसुब्रह्मण्यशर्मणःकृतिषु पुरुषार्थमीमांसा ॥

# हेतुवादः।

पदवाक्यप्रमाणपरिपाटीपाटववित्तपण्डितवर के. सुब्रह्मण्यशास्त्रिभिः पुरुषार्थमीमांसानामाऽयं लघुनिबन्धो व्यलेखि गतकार्त्तिकमासे। प्रयोजकं तत्र किञ्चित्सप्रेरणमासीत्। सौजन्यादिसद्गुणगणालङ्कृतैः श्रीमद्भिर्माधवरावमहाशयैर्महीसूरमहीमहेन्द्रमन्त्रिभिः प्रसिद्धीकृतं यत्पुरुषार्थविषयकनिबन्धलेखकाय यदि तदीयलेखं परीक्षकपरिषत्समीचीनतमं निर्णेष्यति तदा पारितोषिकमुपहारीकरिष्यत इति। पारितोषिकासादनायागृध्नुभिः केवलं परीक्षकपरिषत्परीक्षणप्रणताश्रयेण निबन्धं विलिख्य न्यधुस्तदग्रे। यद्यपि पारितोषिकयोग्यता परिषदान्यत्र निहिता तथापि "किमपद्यः करिकुम्भजो मणि"रिति माघोक्तिमनुसन्धाय निबन्धस्यास्य मुद्रणं लोकोपकाराय भविष्यतीति मत्वा मुद्रापितोऽयं ग्रन्थः। स्वल्पस्याप्येतस्य निबन्धस्य परिशीलनेन परिशीलयितुरवश्यमेव पुरुषार्थस्वरूप—तत्साधनावगम—तत्फलसंवेदन—तदासादनौत्सुक्यादिनैकविधप्रयोजनासिद्धिर्भवित्रीति—

आशासानः

जामनगरवास्तव्यो हरिशङ्करात्मजः

शास्त्री हाथीभाईशर्मा.